टी० अस्मिन् प्रबन्धे निश्शेषां वस्तुवृत्तिं निपुणं न्यस्यता स्थापयता मया क्वापि कोणे आभासेऽर्थे यच्चोदासि गहनेऽर्थे यच्च द्विधा वा समगणि विकल्पेनाभाणि । तच्च सन्मतीनां—विदुषां संमतमेव न पुनः स्वकपोलकल्पितत्वमाचेण, तच्च भगवल्लक्ष्मणाचार्यमुद्रां निष्कृष्टमद्गुदाचार्यशिक्षाशतगुणितमतेरप्रमत्तान्मत्तोऽन्यः कश्चिन्न प्रभुरित्यन्वयः, अनेन मदुक्तानुसारेणैवान्तेवासिभिरवशिष्टं निष्कृष्टव्यं न पुनस्तद्विरोधेनेति भावः ॥ १३५ ॥

दृष्ट इति ।

**मू० दृष्टेऽपह्नुत्यभावादनुमितिविषये लाघवस्यानुरोधाच्छास्त्रेणैवावसेये विहतिविरहिते नास्तिकत्वप्रहाणात् । नाथो*पज्ञं प्रवृत्तं बहुभिरुपचितं यामुनेयप्रबन्धैस्त्रातं सम्यग्यतीन्द्रैरिदमखिलतमः†कर्षणं दर्शनं नः ॥ १३६ ॥**

टी० एतस्य सिद्धान्तस्य दृष्टेऽपह्नुत्यभावात् प्रत्यक्षसिद्धेऽर्थे मृषावादिप्रभृतिवदपह्नवाभावादनुमितिविषये लाघवस्यानुरोधाद्वैशेषि-

* यद्यपि श्रीसंप्रदायस्याद्याचार्यो भगवान्नारायणः श्रीर्देवी चेत्येतस्य संप्रदायस्य नाथमुन्युपज्ञत्वाभिधानं न्यूनमिवाभाति स्थूलदृशाम्, उपज्ञा ज्ञानमाद्यं स्याज्ज्ञात्वाऽऽरम्भ उपक्रम इत्याभिधानिकैरुपज्ञापदस्याद्यज्ञानरूपार्थ एव प्रयुक्तत्वात् । तथाऽपि नाथमुनिभ्यः पूर्वं बौद्धध्वान्तावृतेऽस्मिन् भारतवर्षे आसीत्तादृशी भीतिर्बौद्धानां यद् वैदिकं वर्त्मानुवर्तितुमिच्छतामपि श्री ६ शङ्कराचार्यप्रभृतीनामनुवर्तनीयमभवच्छ्वश्रूभिक्षाप्रतिक्षेपन्यायेन बौद्धैकदेशिनां योगाचाराणामेव मतं किंचित्परिवर्त्य । श्री ६ नाथमुनयस्तु परेषामेव भयमादधतस्तथोन्मूलयाञ्चक्रुर्यथा ते कान्दिशीकतामासेदिवांसः । अत एव त्वस्मद्गुरुरत्नपङ्क्तिमत्नमालायां श्रीनाथमुनि–यामुनाचार्यौ श्री ६ रामानुजमुनिभ्यः प्राचीनौ मध्यमणित्वेन पर्यगणिषाताम्, तस्माच्चाथोपज्ञं प्रवृत्तमित्युक्तिस्तेषां निखिलवादिप्रतिभटत्वेन समादरमात्रतात्पर्यिका यथा पाणिन्युपज्ञं व्याकरणमित्युक्तिस्तस्य महर्षेः प्रशंसामात्रार्था, न हि पाणिनेः पूर्वमनादिनिधनाविच्छिन्नसंप्रदायानां वेदानां व्याकरणमेव नाभूदिति प्राज्ञ आशङ्कतापि । तत्सुष्ठु नाथोपज्ञमित्युक्तिस्तेषां श्रीसंप्रदाये मान्यतमत्वाभिप्रायेति ।

† कर्शनमिति द्रविडपुस्तकपाठः ।

कादिवदनपेक्षितकल्पनाभावात् शास्त्रैणैवावसेये प्रमाणबाधविरहिते नास्तिकत्वप्रहाणात्–निरीश्वरमीमांसकवदीश्वरापह्नवप्रभृत्यनर्थकार्थप्रहाणात् । नाथोपज्ञं प्रवृत्तं–नाथमुनिमारभ्य प्रवृत्तं, बहुभिर्यामुनेयप्रब*न्धैरुपचितं, य†तीन्द्रैस्सम्यगेव भाष्यादिप्रबन्ध‡पङ्क्तिनिर्माणेन परिचातमिदमेव दर्शनमखिलतमःकर्षणमिति स्वदर्शनस्य सूर्योदयवदशेषार्थप्रकाशकत्वं दर्शयति दृष्ट इत्यादिना ॥ १३६ ॥

एतद्दर्शनप्रवर्त्तकाचार्य्यप्रशंसया स्वभक्तिमेवोत्तम्भयन् परपक्षप्रवर्त्तकानां परागपटलवदाभासत्वमेवाह । हृद्येति ।

मू० हृद्या हृत्पद्मसिंहासनरसिकहयग्रीवहेषोर्म्मिघोषक्षिप्तप्रत्यर्थिदृप्तिर्जयति बहुगुणा पङ्क्तिरस्मद्गुरूणाम् । दिक्तौधाबद्धजैत्रध्वजपटपवनस्फातिनिर्धूततत्तत्सिद्धान्तस्तोमतूलस्तवकविगमनव्यक्तसद्वर्त्तनीका ॥ १३७ ॥

टी० अक्षरार्थो व्यक्तः १३७ ॥

अध्यक्षमिति ।

मू० अध्यक्षं यच्छ्रुतं वा लघु भवति तदित्यादिमो वादिमोहस्तत्त्वोदर्का न तर्क्कास्तदिह जगति किं मेधया साधयामः । तिष्ठत्वेतल्लघिष्ठाः कतिचन दधतो मानसे मानसेतुं हं हो सभ्यानसभ्यस्थपुटमुखपुटा दुर्जना निर्जयन्ति॥१३८॥

* सिद्धित्रय–भगवद्गीतारहस्याद्यर्थनिरूपणरूपैरित्यर्थः ।

† भगवद्रामानुजमुनिभिः ।

‡ मन्दमध्यमोत्तमाधिकार्यनुजिघृक्षया सार–वेदार्थसंग्रह–वेदान्तदीप–श्रीभाष्य–गीताभाष्यरूपग्रन्थरत्ननिर्माणेनेत्यर्थः ।

टी० इत्थं सर्वोत्तरे दर्शने विद्यमानेऽप्याभासवादिनः प्रत्यक्षागमप्रमित*योरर्थयोर्लघुत्वमेव प्रतिपद्यन्ते अयमादिमो वादिमोहः, प्रत्यक्षागमयोरेव प्राबल्यात्, तद्विरुद्धस्य चानुमानस्यात्यन्तदौर्बल्यात्, यदि वा तर्कमेव परिशोधयामः न तत्त्वोदर्कास्तर्काः केवलं दन्तादन्तिप्रायासमात्रावशेषाः तर्काणामप्रतिष्ठितत्वात्, अत्र तर्कशब्दोऽनुमानं तदनुग्राहकं तर्कमपि संगृह्णाति, एवं भूते जगति किम्मेधया साधयाम इति निर्वेदवचनम्। अथवाऽधिक्षेपवादः इममेवाधिक्षेपवादमुत्तरोत्तरमुद्दीपयति। तिष्ठत्वेतदिति। लघिष्ठाः कतिचन मानसे—मनसि, अभिमानस्य सेतुं—परां काष्ठां वहन्तो दुर्जनाः स्वयमसभ्यास्थपुटमुखपुटास्सभ्यान्निर्जयन्ति किमुक्तं भवति—स्वयं भषणमात्रेणैव भाषमाणा इव जल्पन्तीत्यर्थः, हंहो इति विषादपूर्वाधिक्षेपे ॥ १३८ ॥

इत्थमनेन प्रबन्धेन शिक्षितार्थस्सर्वेष्वपि तन्त्रेषु स्वातन्त्र्यं तन्वयन् प्रतिभटविद्वत्करोटीकुट्टाकक्रीडाक्षमम् अष्टापदकटकं वामपादे बिभर्त्विति प्रकृतस्य प्रबन्धस्य वैतण्डिकविजयहेतुत्वेनातिशयमाह। स्यादित्थमिति।

**मू० स्यादित्थं विश्वतत्त्वं दृढतरममुना तत्त्वदृ-**
**ष्टिश्च दृष्टा दिष्ट्या चादिष्टमेतद्दिशि दिशि**
**लड्हो डिण्डिमस्ताडनीयः। स्यादित्थं शि-**
**क्षितार्थो य इह यतिपतिच्छात्रहस्ताग्रनृ-**
**त्यन्नाराचन्यासरेखासहचरितमतिस्सर्वतन्त्र-**

* प्रत्यक्षतः प्रतिपन्नानां घटपटादीनां ज्ञानविश्रान्तस्वरूपत्वं वा ज्ञानबाध्यत्वं वा व्यवहारकालमात्रावस्थायित्वं वा लघुत्वम् एवं कौषीतक्यादिशब्दप्रतिपन्नानां ब्रह्मलोकादीनामपि परमते तथा भाव एव स्वर्गापवर्गनरकादीनामपि शास्त्रमात्रप्रमाणकानां तथा भाव एवेति सर्वस्यापि प्रत्यक्षागमप्रतिपन्नस्यार्थस्य पूर्वोक्तं लघुत्वमेवापद्यते इति तत्त्वम्।

स्वतन्त्रः । शुष्कोपन्यासशिक्षापटिमकटुरट-
द्वैरि*विद्वत्करोटीकुट्टाकक्रीडमष्टापदकट-
कमसौ वामपादे बिभर्त्तु ॥ १३९ ॥

टी० पदार्थः स्पष्टः ॥ १३६ ॥

सर्वमङ्गलसिद्ध्यर्थं प्रबन्धसमाप्तौ सकलाचार्यदेशिकं श्रीमद्रामानुजाचार्यं प्रतिभटसकलसिद्धान्तध्वान्तनिरासकत्वेन प्रस्तौति, स्तौति च । गाथेति ।

इति कवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेङ्कट-
नाथस्य वेदान्ताचार्यस्य कृतिषु तत्त्वमुक्ताकलाप-
व्याख्याने सर्वार्थसिद्धावद्रव्यसरः पञ्चमः ॥

सू० गाथा ताथागतानां गलति गमनिका कापिली
क्वापि लीना क्षीणा काणादवाणी द्रुहिणहरगि-
रस्सौरभं नारभन्ते । क्षामा कौमारिलोक्तिर्ज-
गति गुरुमतं गौरवाद् दूरवान्तं का शङ्का शङ्क-
रादेर्भजति यतिपतौ भद्रवेदीं त्रिवेदीम् ॥१४०॥

इति कवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य
श्रीमद्वेङ्कटनाथस्य वेदान्ताचार्यस्य कृतिषु
तत्त्वमुक्ताकलापेऽद्रव्यसरः पञ्चमः ॥
सर्वार्थसिद्धिसहितः समाप्तश्चायं महानिबन्धः ॥



॥ श्रीः ॥ ॥ श्रीः ॥ ॥ श्रीः ॥

* भायडविद्वत्करोटीति पा० ।